॥इति वटसावित्रीपूजासार्थंकथा स०॥

हें पुस्तक मुंबईंत विनायक दादोबा पुरंदरे आणि कंपनी यांनीं

"कर्नाटक" छापखान्यांत छापविलें.

शके १८२० संवत् १९५५

श्रीगणेशायनमः ॥ ॥ अथज्येष्ठकृष्णपौर्णमास्यां अमायांवा वटसावित्रीव्रतं लि-
ख्यते इयंच पूर्वविद्धाग्राह्या ॥ भूतविद्धानकर्तव्याअमावास्याचपूर्णिमा ॥ वर्जयि-
त्वामुनिश्रेष्ठसावित्रीव्रतमुत्तमं--इतिब्रह्मवैवर्ते ॥ ज्येष्ठेमासिसितेपक्षेद्वादश्यांरजनीमु-
खे इत्युपक्रम्य व्रतंत्रिरात्रमुद्दिश्यदिवारात्रंस्थिराभवेत् ॥ ज्येष्ठेमासिसितेपक्षेपूर्णिमा
यांतथाव्रतं ॥ चीर्णंव्रतंमहाभक्त्याकथितंतेमयानघे ॥ धर्मराजउवाच ॥ इतिदाक्षिणा
त्याश्चैवमाचरंतिपाश्चात्यादयस्तु अमावास्यायामाचरंति तच्चोक्तंनिर्णयामृतेभविष्ये
अमायांचतथाज्येष्ठेवटमूलेमहासती ॥ त्रिरात्रोपोषितानारीविधिनानेनपूजयेत् ॥
अशक्तौतुत्रयोदश्यांनक्तंकुर्याज्जितेंद्रिया ॥ अयाचितंचतुर्दश्याममायांसमुपोषणमि-
ति ॥ हेमाद्र्यादिभिस्तुभाद्रपदपौर्णमास्यामिदमुक्तं तेतुतदानीमाचरंति यदात्वष्टाद-
शघटिकाचतुर्दशीतदापरैव पूर्वविद्धैवसावित्रीव्रतेपंचदशीतिथिः ॥ नाड्योष्टादशभू-
तस्यतत्रकुर्यात्परेहनीतिमाधवोक्तेः ॥ वस्तुतस्तुभूतविद्धानिषेधएव भूतोष्टादशना-
डिभिरितिवाक्यं अन्यथासावित्रीव्रतेऽष्टादशनाडीवेधदोषकल्पनायां निषेधांतरकल्प-

नागौरवं ॥ ज्येष्ठेमासित्रयं दश्यांदंतधावनपूर्वकं ॥ दंतकाष्ठंशुभंशुभ्रंजातीयंचतुरंगु-
लं ॥ तस्यापराण्हसमयेनद्यादौविमलेजले ॥ तिलामलककल्केनकेशान्संशोध्यय-
त्नतः ॥ स्नात्वाचैवशुचिर्भूत्वावटंसिंचेद्दहूदकैः ॥ वृद्धिक्षयेतथारोगेऋतुमत्यांतथै
वच ॥ कारयेद्द्विप्रहस्तेनसर्वंसंपद्यतेशुभं ॥ इदंचत्रयोदशीमारभ्यपूर्णिमांतंकर्तव्यं ॥
सधवाविधवावापिसपुत्रापुत्रवर्जिता ॥ भर्तुरायुर्विवृद्ध्यर्थंकुर्याद्व्रतमिदंशुभं ॥ ज्येष्ठे
मासेतुसंप्राप्तेपौर्णमास्यांपतिव्रता ॥ स्नात्वाचैवशुचिर्भूत्वानियमंकारयेत्ततः ॥ अथ
व्रतविधिः--वटसमीपेगत्वा तत्रासौसंस्कारयुक्तवटपूजाउक्ता॥ आचम्य सुमुखश्चेत्या-
दि विष्णुर्विष्णुः श्रीमद्भगवतो० पुराणोक्तफलप्राप्त्यर्थं ममभर्तुः पुत्राणां आयुरारो-
ग्यप्राप्तये जन्मजन्मन्यवैधव्यप्राप्तयेचसावित्रीव्रतमहंकरिष्ये इतिसंकल्प्य ॥ वटमूले
स्थितोब्रह्मावटमध्येजनार्दनः ॥ वटाग्रेतुशिवंविद्यात्सावित्रीवटसंयुता ॥ वटसिंचामि-
तेमूलंसलिलैरमृतोपमैः ॥ सूत्रेणवेष्टयेद्भक्त्यागंधपुष्पाक्षतैःशुभैः ॥ नमोवटसावित्री
भ्यांभ्रामयंतींप्रदक्षिणां ॥ सावित्रींचवटंसम्यगेभिर्मंत्रैःप्रपूजयेत् ॥ एवंविधिंबहिःकृ-

त्वासम्यग्वैगृहमागता ॥ हरिद्राचंदनेनैवगृहमध्येलिखेद्वटं ॥ तत्रोपविश्यसंकल्प्यपू-
जाकार्याप्रयत्नतः ॥ तिथ्यादिसंकीर्त्य ममजन्मजन्मनि अवैधव्यप्राप्तयेभर्तुश्चिरायु-
रारोग्यसंपदादिकामनयासावित्रीव्रतमहंकरिष्ये ॥ नियममंत्रः--त्रिरात्रंलंघयित्वातु
चतुर्थेदिवसेत्वहं चंद्रायार्घ्यंप्रदत्त्वाचपूजयित्वाकृतांसतीं ॥ मिष्टान्नानियथाशक्त्याभो-
जयित्वाद्विजोत्तमान् ॥ भोक्ष्येहंतुजगद्धात्रिनिर्विघ्नंकुरुमेशुभे--इतिनियममंत्रः ॥
तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकरिष्ये आसनादिकलशाराधनं घंटापूजनं
करिष्ये॥ वक्रतुंडेतिगणेशपूजनं अपसर्पंतुयेभूता० इत्यासनं ॥ कलशस्यमुखेविष्णुः
कं० इतिकलशपूजनं ॥ आगमार्थंतुदेवानामितिघंटापूजनंकुर्यात् ॥ ततःभूमिंस्पृष्ट्वा
महीद्यौःपृथिवीतिऋक्ओषधयःसं०आकलशेषु०इतिकलशंनिधाय पंचपल्लवसप्तमृत्ति-
काहिरण्ययवान्कुंभेनिक्षिप्य तदुपरिवंशपात्रंनिधायतस्योपरि सप्तधान्यानिपृथक्स्था-
प्यानि तदुपरिवस्त्रं वस्त्रोपरिद्वात्रिंशद्रबुकपरिमितांवालुकाप्रतिमां ब्रह्मणासहसंस्थाप्य
पूजयेत् ॥ ब्रह्मणेनमः सावित्र्येनमः नारदायनमः ॥ अथध्यानं उपवीतधरंदेवंसाक्ष-

सूत्रकमंडलुं वामोत्संगगतांतस्यसावित्रींब्रह्मणःप्रियां आदित्यवर्णांधर्मज्ञांसाक्षमाला-
करांतथा धर्मराजंपितृपतिंभूतानांकर्मसाक्षिणं ब्रह्मसावित्रीसत्यवान्सावित्रीयमनार-
ददेवताभ्योनमः ध्यायामि ॥ ब्रह्मणासहितांदेवींसावित्रींलोकमातरं सत्यव्रतंच सा-
वित्रींवटंचावाहयाम्यहं ब्रह्मसावित्री० आवहनंस० ॥ ब्रह्मणासहसावित्रीसत्यवत्स-
हितेप्रिये हेमासनंगृह्यतांतुधर्मराजसुरेश्वर ब्रह्मसावित्री० आसनंसमर्पयामि ॥ गंगा-
जलंसमानीतंपाद्यार्थंब्रह्मणःप्रिये भक्त्यादत्तंधर्मराजसावित्री प्रतिगृह्यतां ब्रह्मसा-
वित्री० पाद्यंस० ॥ भक्त्यासमाहृतंतोयंफलपुष्पसमन्वितं अर्घ्यंगृहाणसावित्रीमम-
सत्यव्रतप्रिये ब्रह्मसावित्री० अर्घ्यंसमर्पयामि ॥ सुगंधिसहकर्पूरंसुरभिस्वादुशीतलं
ब्रह्मणासहसावित्रीकुरुष्वाचमनीयकं ब्रह्मसावित्री० आचमनीयंस० ॥ सितासित-
सरित्तोयंतापत्रयहरंशिवं सुगंधद्रव्यसंयुक्तंस्नानार्थंप्रतिगृह्य० ब्रह्मसावित्री० मलाप-
कर्षस्नानंस० ॥ सौरभेयंमहाद्दिव्यंपवित्रंपुष्टिवर्धनंस्नानार्थंतेमयादत्तंदुग्धंगृह्णन्नमोस्तुते
ब्रह्मसावित्री० पयस्नानंस० ॥ पयस्नानांतरेणशुद्धोदकस्नानंसमर्पयामि ॥ शुद्धोदक

स्नानांतरेणआचमनीयंस० सकलपूजार्थे अक्षतांस०॥जगदेतद्दासित्वंत्वमेवजगतां-
हितं दधिवामनरूपेणदधिस्नानायगृह्यतां ब्रह्मसावित्री० दधिस्नानं०॥ घृतकुंभसमायु-
क्तंघृतयोनेघृतप्रिये घृतभुग्घृतधामासिघृतंस्नानायगृह्यतां ब्रह्मसावित्री०घृतस्नानंस०॥
मधुरूपोवसंतस्त्वंत्वमेवजगतांमधु मधुसूदनसंप्रीत्यामधुस्नानायगृह्यतां ब्रह्मसावि-
त्री० मधुस्नानंस० ॥ इक्षुरससमुत्पन्नाशर्करामधुराविभो स्नानार्थंतेप्रयच्छामिप्रीतोभव
सुरेश्वर ब्रह्मसावित्री०शर्करास्नानंस०॥पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नप
नंप्रीयतांपरमेश्वरि ब्रह्मसावित्री०पंचामृतस्नानंस० ॥ काश्मीरागरुकस्तूरीकर्पूरमलया-
न्वितं उद्वर्तनंमयादत्तंगृह्यतांपरमेश्वरी ब्रह्मसावित्री० उद्वर्तनंस० ॥ गंगाचयमुनाचैव
गोदावरिसरस्वती तापीपयोष्णी रेवाचताभ्यःस्नानायगृह्यतां ब्रह्मसावित्री० शुद्धोदक
स्नानंस० शुद्धोदकस्नानांतरेणआचमनंस० ॥गंधादिनांपूजयित्वानिर्माल्यंविसृज्य
महिम्नःपारंतेइतिस्तोत्रेणमहाभिषेकंकुर्यात्॥महिम्नःपारंतेपरमविदुषोयद्यसदृशीस्तुति-
र्ब्रह्मादीनामपितदवसन्नास्त्वयिगिरः अथावाच्यःसर्वस्वमतिपरिणामावधिगृणन्ममा-

प्येषस्तोत्रेहरनिरपवादःपरिकरः १ अतीतःपंथानंतवचमहिमावाङ्मनसयोरतद्व्यावृ-
त्त्यायंचकितमपिधत्तेश्रुतिरपि सकस्यस्तोतव्यःकतिविधगुणःकस्यविषयःपदेत्वर्वाचीं-
नेपततिनमनःकस्यनवचः२ मधुस्फीतावाचःपरममममृतंनिर्मितवतस्तवब्रह्मन्किंवाग-
पिसुरगुरोर्विस्मयपदं ममत्वेतांवाणींगुणकथनपुण्येनभवतःपुनामीत्यर्थेस्मिन्पुरमथन
बुद्धिर्व्यवसिता ३ ब्रह्मसावित्री०सूक्ष्मतंतुमयंवस्त्रंयुग्मंकार्पाससंभवं सावित्रीब्रह्मणः
कांतेत्रिदशैःसहगृह्यतां ब्रह्मसावित्री० वस्त्रंस०॥ मयादत्तंपरंब्रह्मदेवहाटकसंभवं उपवी-
तंगृहाणेदंसावित्रीदैवतैःसह ब्रह्मसावित्री० यज्ञोपवीतं०॥ नवरत्नादिभिर्बद्धांसौवर्णेन
चतंतुभिःनिर्मितांकंचुकींभक्त्यागृहाणपरमेश्वरी ब्रह्मसावित्री० कंचुकींसमर्पयामि॥प-
ट्टसूत्रभवंदिव्यंस्वर्णपूर्णाकृतीयुतं सौमंगल्याभिवृद्ध्यर्थंकंठसूत्रंददामिते ब्रह्मसावि-
त्री० कंठसूत्रंस०॥ ताडपत्राणिदिव्याणिविचित्राणिशुभानिच कराभरणयुक्तानिगौ-
रित्वंप्रतिगृह्यतां ब्रह्मसावित्री० ताडपत्रं०॥ कुंकुमागरुकर्पूरकस्तूरीरोचनायुतं चंदनं
तेमयादत्तंसावित्रीप्रतिगृह्यतां ब्रह्मसावित्री० चंदनं०॥ अक्षताश्चसुरश्रेष्ठाःकेशरेणच-

मिश्रिताः मयानिवेदिताभक्त्यागृहाणपरमेश्वरि ब्रह्मसावित्री० अक्षतान्समर्पयामि॥
हरिद्रांरंजिनेदेविसुखसौभाग्यसंपदा अतस्त्वांपूजयिष्यामिगृहाणपरमेश्वरि ब्रह्मसा-
वित्री० हरिद्रांस० ॥ कुंकुमंकामदंदिव्यंकामिनीकामसंभवं कुंकुमेनार्चितेदेविसौ-
भाग्यंप्रतिगृह्यतां ब्रह्मसावित्री० कुंकुमंस० ॥ सुनीलभ्रमरासाकंकज्जलंनेत्रमंडलं
मयादत्तमिदंभक्त्याकज्जलंप्रतिगृह्यतां ब्रह्मसावित्री० कज्जलंसमर्पयामि॥ विद्युद्वर्णेन
संकाशंजपाकुसुमसंनिभं सिंदूरादिप्रदास्यामिसौभाग्यंदेहिमेचिरं ब्रह्मसावित्री० सिं-
दूरंसमर्पयामि ॥ स्वभावसुंदरांगित्वंनानारत्नादिभिर्युते भूषणानिविचित्राणिप्रीत्य-
र्थंप्रतिगृह्यतां ब्रह्मसावित्री० भूषणानिस० शिरोनासाकंठकर्णकटिहस्तपदादिषु अलं-
कारान्मयादत्तान्गृहाणपरमेश्वरि ब्रह्मसावित्री० सर्वालंकारान्स० ॥ नानासुगंधिकं
द्रव्यंचूर्णीकृत्वाप्रयत्नतः ददामितेनमस्तुभ्यंप्रीत्यर्थंप्रतिगृह्यतां ब्रह्मसावित्री० नाना-
परिमलद्रव्यंसमर्पयामि ॥ माल्यादीनिसुगंधीनिमालत्यादीनिवैप्रभो मयाहृतानि
पुष्पाणिपूजार्थंप्रतिगृह्यतां ब्रह्मसावित्री० पुष्पाणिस० ॥ अथांगपूजा—सावित्र्यैनमः

पादौपूजयामि वटप्रियायैनमः जंघेपूजयामि कमलपत्राक्ष्यै॰ कटिंपू॰ भूतधारिण्यै॰
उदरं॰ गायत्र्यै॰ कंठंपू॰ ब्रह्मणःप्रियायै॰ मुखंपूज॰ सौभाग्यदात्र्यै॰ शिरःपू॰ अथ
ब्रह्मसत्यपूजा धात्रेनमः पादौपू॰ विधात्रेन॰ जंघेपू॰ स्रष्ट्रेनमः ऊरूपू॰ प्रजापतये॰
मेंढ्रंपू॰ परमेष्ठिनेन॰ कटिंपू॰ अग्निरूपा॰ नाभिंपू॰ पद्मनाभाय॰ हृदयंपू॰ वेधसेन-
मः बाहूंपू॰ विधये॰ कंठंपू॰ हिरण्यगर्भाय॰ मुखंपू॰ ब्रह्मणेनमः शिरःपू॰ विष्णवेन-
मः सर्वांगंपू॰॥ देवद्रुमरसोद्भूतःकालागुरुसमन्वितःआघ्रेयतामयंधूपःसावित्रीप्रतिगृ-
ह्यतां ब्रह्मसावित्री॰ धूपंस॰ ॥ चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणं आर्तिक्यंक-
ल्पितंभक्त्यागृहाणपरमेश्वरि ब्रह्मसावित्री॰ दीपंस॰ ॥ अन्नंचतुर्विधंस्वादुरसैःषड्-
भिःसमन्वितं मयानिवेदितंभक्त्यानैवेद्यंप्रतिगृह्यतां ब्रह्मसावित्री॰ नैवेद्यंस॰ ॥ न-
मस्तेदेवदेवेशसर्वतृप्तिकरंपरं मयानिवेदितंतुभ्यंगृहाणजलमुत्तमं ब्रह्मसावित्री॰ म-
ध्येपानीयंस॰ ॥ उत्तरापोशनं॰ हस्तंप्र॰ मुखंप्र॰ सर्वो॰ करोद्वर्तनार्थेचंदनंस॰
तांबूलदलकर्पूरपूगभागतरंगितं संशोधितंसुगंधंचतांबूलंप्रतिगृह्यतां ब्रह्मसावित्री॰

तांबूलंस० ॥ इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्म-
नि ब्रह्मसावित्री०फलंस० हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदम-
तः शांतिंप्रयच्छमे ब्रह्मसा० सुवर्णपुष्पदक्षिणांस० सावित्रीब्रह्मसावित्रीसततंब्रह्मणः
प्रिये नीराजयामिदेवेशनिर्जरैः सहभूतये ब्रह्मसावित्री० नीरांजनदीपंस० ॥ कर्पूर
गौरंकरुणावतारंसंसारसारंभुजगेंद्रहारं सदावसंतंहृदयारविंदंभवंभवानीसहितंनमामि
ब्रह्मसावित्री० कर्पूरार्तिक्यंस० ॥ नमोब्रह्मण्यदेव्यैतेसततंब्रह्मणःप्रिये पूजितासिद्धि-
जैःसर्वैःस्त्रीभिर्मुनिगणैस्तथा त्रिसंध्यंदेविभूतानांवंदनीयेसुशोभने मयादत्ताचपू-
जेयंत्वंगृहाणनमोस्तुते ब्रह्मसावित्री० मंत्रपुष्पंस० यानिकानिचपापानिजन्मांतर
कृतानिच तानितानिविनश्यंतिप्रदक्षिणपदेपदे ब्रह्मसावित्री० प्रदक्षिणांसमर्पयामि
॥ नमस्तुभ्यंजगद्धात्रिभक्तानांहितकारिणी जगद्भीतिविनाशिन्यैसर्वमंगलमूर्तये
ब्रह्मसावित्री० नमस्कारान्स० ब्रह्मसावित्री० छत्रं चामरं गीतं वाद्यं आंदोलिकाम्

॥ ५ ॥ सर्वराजोपचारान्स० ॥ अथताम्रपात्रे गंधपुष्पहिरण्यंचादाय ओंकारपूर्वकेदेविसर्व
दुःखनिवारिणि देवमातर्नमस्तुभ्यंसौभाग्यंचप्रयच्छमे ब्रह्मसावित्री० इदमर्घ्यंस०
पतिव्रतेमहाभागेब्रह्माणिचशुचिस्मिते दृढव्रतेदृढमतेभर्तुश्चप्रियवादिनि सावित्र्यैनमः
इदमर्घ्यंस० ॥ अवैधव्यंचसौभाग्यंदेहित्वंममसुव्रते पुत्रान्पौत्रांश्चसौख्यंचगृहाणार्घ्यं
नमोस्तुते ब्रह्मसावित्री० इदमर्घ्यंस० ॥ सत्यव्रतेनमस्तेस्तुकृपांकुरुममोपरि कृपांज-
लौमयाभक्त्याअर्घ्यंदत्तंनमोस्तुते ब्रह्मसावित्री०इदमर्घ्यंस० ॥ त्वंकर्मसाक्षीलोका-
नांशुभाशुभविवेककृत् वैवस्वतायधर्मायगृहा० धर्माय० इदमर्घ्यंस० ॥ नारदायन-
मस्तुभ्यंवीणावादनतत्पर देवर्षेत्वंमहाभागगृहाणार्घ्यंनमोस्तुते नारदायनमः इ-
दमर्घ्यंसम० ॥ कल्पवृक्षमहाभागशोकदुःखापहारक पाहित्वंममभर्तुश्चवटराजनमोस्तु-
ते वटराजायनमः इदमर्घ्यंसमर्पयामि ॥ प्रार्थना–सावित्रीब्रह्मगायत्रीसर्वदाप्रियभा- ॥ ५ ॥
षिणि तेनसत्येनमांपाहिदुःखसंसारसागरात् त्वंगौरीत्वंशचीलक्ष्मीस्त्वंप्रभाचंद्रमंडले

त्वमेवचजगन्मातात्वमुद्धरवरानने यन्मयादुष्कृतंसर्वंकृतंजन्मशतैरपि भस्मीभवतु
तत्सर्वमवैधव्यंचदेहिमे अवियोगोयथादेवसावित्र्यासहितस्यते अवियोगस्तथाऽस्मा
कंभूयाज्जन्मनिजन्मनि–इतिप्रार्थना ॥ यस्यस्मृत्याच० अनेनयथानेन कृतपूजने
न तेनश्रीब्रह्मसावित्रीयमनारददेवताःप्रीयतां ॥ अथपूर्वोक्त०वटसावित्रीव्रतांगत्वेन
पूजासांगतासिद्ध्यर्थं ब्राह्मणायवायनप्रदानंकरिष्ये तदंगब्राह्मणपूजनंचकरिष्ये ॥
महाविष्णुस्वरूपिणेब्राह्मणाय इदमासनं स्वासनं इदंपाद्यं सुपाद्यं इदमाचमनं अ-
स्त्वाचमनं गंधाःपांतु सौमंगल्यंचास्तु अक्षताःपांतु आयुष्यमस्तु पुष्पाणिपांतु सं-
श्रेयोस्तु तांबूलंपांतु ऐश्वर्यमस्तु दक्षिणाःपांतु बहुदेयंचास्तु नमोस्त्वनंताय०इति
मंत्रेणअक्षतान्दद्यात् ॥ फलंवस्त्रसमायुक्तंसौभाग्यद्रव्यसंयुतं वंशपात्रेनिधायादौब्रा-
ह्मणायनिवेदयेत् उपायनमिदंदेवव्रतसंपूर्णहेतवे वाणकंद्विजवर्यायसहिरण्यंददाम्य-
हं विप्रायवेदविदुषेश्रोत्रियायकुटुंबिने नरकोत्तारणार्थायअच्युतःप्रियतामिति इदं

सौभाग्यवायनदानं सदक्षिणाकंसतांबूलं अमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे प्रतिगृह्यतां प्रतिगृह्णामि तेनश्रीब्रह्मसावित्रीदेवताप्रीयतां ॥ सुवासिन्यस्ततःपूज्यादिवसेदिवसेगते सिंदूरंकुंकुमंचैवतांबूलंचपवित्रकं तथादद्याच्चशूर्पाणिभक्ष्यभोज्यादिकं सदा महात्म्यंचैवसावित्र्याः श्रोतव्यंमुनिसत्तम पुराणश्रवणंकार्यंसतीनांचरितंशुभम् ॥ ॥ इतिपूजासमाप्त ॥ ॥ छ ॥ ॥ छ ॥



श्रीगणेशायनमः ॥ ॥ अथस्कंदपुराणांतर्गतवटसावित्रीकथालिख्यते ॥ ॥ सनत्कुमारमुनी शिवाप्रत प्रश्न करितात कीं, हे देवा, कुलीन स्त्रियांला महाभाग्य देणारें आणि अवैधव्य करणारें तसेंच पुत्रपौत्रादिक वाढविणारें असें व्रत कोणतें तें मला सांगा ॥ १ ॥ असा सनत्कुमाराचा प्रश्न ऐकून ईश्वर सांगतातः हे सनत्कुमारा ! मद्रदेशामध्यें वीर व ज्ञानसंपन्न असून परम धार्मिक आणि वेदवेदांगामध्यें पारंगत

श्रीः ॥ सनत्कुमारउवाच ॥ कुलस्त्रीणांव्रतंदेवमहाभाग्यंतथैवच ॥ अवैधव्यकरंस्त्रीणांपुत्रपौत्रप्रवर्धनं ॥ १ ॥ ईश्वरउवाच ॥ आसीन्मद्रेषुधर्मात्माज्ञानीपरमधार्मिकः॥ नाम्नाचाश्वपतिर्वीरोवेदवेदांगपारगः॥२॥ अनपत्योमहाबाहुःसर्वैश्वर्यसमन्वितः॥ सपत्नीकस्तपस्तेपेसमाराधयतेनृपः॥३॥सावित्रींचप्रसावित्रींजपन्नास्तेमहामनाः॥ जुहोतिचैवसावित्रींभक्त्यापरमयायुतः ॥ ४ ॥

असा अश्वपति या नामेंकरून राजा असता झाला ॥ २ ॥ तो महाबाहु अश्वपति राजा सर्वैश्वर्यसंपन्न असून अपत्यरहित असल्यामुळें पत्नीसहवर्तमान तप करिता झाला ॥ ३ ॥ तो उदारचित्त असा सावित्रीमंत्राचा जप करीत होत्साता सावित्रीप्रीसर्थ हवनही करून परम भक्तीनें आराधन करिता झाला ॥ ४ ॥

तदनंतर सावित्री देवि प्रसन्न होऊन त्या राजाला प्रत्यक्ष दर्शन देती झाली ॥ ५ ॥ ती अशी कीं समस्त व्याहृति देवतांसहित आणि अक्षसूत्र व कमंडलु धारण करणारी व सर्व जगतास वंद्य अशा सावित्रीप्रत अवलोकन करून ॥६॥ राजानें हर्षयुक्त अंतःकरणेंकरून भक्तिपुरःसर साष्टांग नमस्कार केला. त्या कालीं त्या राजाप्रत अवलोकन करून प्रसन्न होत्साती देवी बोलती झाली ॥७॥ सावित्री ह्मणत्ये—हे

ततस्तुष्टातुसावित्रीसादेवीद्विजसत्तम ॥ साविग्रहवतीदेवीतस्यदर्शनमागता ॥५॥
भूर्भुवःस्वरवत्येषासाक्षंसूत्रकमंडलु ॥ तांतुदृष्ट्वाजगद्वंद्यांसावित्रींचनृपोत्तमः ॥६॥
प्रणिपत्यनृपोभक्त्याप्रहृष्टेनांतरात्मना ॥ तंदृष्ट्वापतितंभूमौतुष्टादेवीजगादह ॥७॥
सावित्र्युवाच॥तुष्टाहंतवराजेंद्रवरंवरयसुव्रत॥एवमुक्तस्तदाराजाप्रसन्नांतामुवाचह
॥८॥ अनपत्योह्यहंदेविपुत्रमिच्छामिशोभने ॥ नान्यंवृणोमिसावित्रीपुत्रमेवजग
न्मये ॥ अन्यदस्तिसमग्रंमेक्षितौयच्चापिदुर्लभं ॥ ९ ॥

राजेंद्रा ! तुला मी प्रसन्न झाल्यें आहें तरी हे सुव्रता वर मागून घे. असें सावित्रीनें सांगितलें असतां सुप्रसन्न अशा त्या देवीप्रत राजा बोलता झाला ॥ ८ ॥ राजा ह्मणतो, हे सावित्री देवी, मला अपत्य नाहीं यास्तव, हे शोभने, मी पुत्राची इच्छा करीत आहें. हे जगन्माये, एक पुत्रावांचून अन्य वर मी

मागत नाहीं, कारण पृथिवीवर जें दुर्लभ तें सर्वही तुझ्या प्रसादेंकरून माझ्या गृहीं आहे. असें राजाचें भाषण ऐकून देवी बोलती झाली ॥ ९ ॥ १० ॥ कीं, हे राजेंद्रा, तुला पुत्र होणार नाहीं, परंतु एक कन्या होईल, ती दोन्ही कुळांचा ( भर्तृकूळ व पितृकूळ यांचा ) उद्धार करील ॥ ११ ॥ व हे राजश्रेष्ठा, ती कन्या माझ्या नामानेंच विख्यात होईल. शिव ह्मणतात, हे मुनिश्रेष्ठा, सनत्कुमारा,

प्रसादात्तवदेवेशितत्सर्वंविद्यतेगृहे ॥ एवमुक्तातुसादेवीप्रत्युवाचनराधिपं॥ १० ॥
सावित्र्युवाच ॥ पुत्रस्तेनास्तिराजेंद्रकन्यैकातेभविष्यति॥कुलद्वयंतुसाराजन्नुद्धरि
ष्यतिभामिनी ॥ ११ ॥ मन्नाम्नाराजशार्दूलतस्यानामभविष्यति ॥ इत्युक्त्वातंमु
निश्रेष्ठराजानंब्रह्मणःप्रिया ॥१२॥ अंतर्धानंगतादेवीसंतुष्टोसौमहीपतिः ॥ ततःक
तिपयाहोभिस्तस्यराज्ञीमहीभुजः ॥ १३ ॥ ससत्वासमजायेतपूर्णेकालेसुपावहि॥
सावित्र्यातुष्टयादत्तासावित्र्याजप्तयातथा ॥ १४ ॥

ती ब्रह्मदेवाची भार्या राजाप्रत असें भाषण करून ॥ १२ ॥ अंतर्धान पातली. त्या कालीं राजा संतुष्ट झाला, नंतर किती एक दिवसांनीं राजाची पट्टराणी गर्भिणी होऊन पूर्ण दिवस झाले असतां प्रसूत झाली. तिला सावित्रीच्या प्रसादानें व सावित्रीमंत्राच्या जपानें जी कन्या झाली ॥ १३ ॥१४॥

तिचें नांव वरदासावित्री असें ठेविलें, व कमळासारिखे नेत्र जिचे अशी ती कन्या देवगर्भासमान
शोभती झाली ॥ १५ ॥ व सुवर्णासारिखी आहे कांति जिची आणि भूमीचे ठायीं रूपानें अप्रतिम
असल्यामुळें कोणीही वर तिची याचना करीना तेव्हां राजा चिंतेप्रत पावता झाला. ॥ १६ ॥ वरांनीं
तिची याचना न करण्याचें कारण तिच्या रूपानें सर्व राजे चकित होते झाले. नंतर अश्वपति

सावित्रीतेनवरदातस्यानामबभूवह ॥ राजतेदेवगर्भाभाकन्याकमललोचना ॥ १५ ॥
तांदृष्ट्वाहेमगर्भाभांराजाचिंतामुपेयिवान् ॥ अयाच्यमानांचवैररूपेणाप्रतिमाभुवि
॥ १६ ॥ तस्यारूपेणतेसर्वेसन्निरुद्धामहीभुजः ॥ ततःसराजाचाहूयउवाचकमले
क्षणां ॥ १७ ॥ पुत्रिप्रदानकालस्तेनयाचंतिचकेचन ॥ वरंवरयहृद्यंतेपतिंगुणस-
मन्वितं ॥ १८ ॥

राजानें त्या कमळनेत्रीला जवळ बोलावून सांगितलें कीं, ॥ १७ ॥ हे कन्ये, तुझा विवाहकाळ
प्राप्त झाला असून तुला कोणी मागत नाहीं; तस्मात् तुझ्या मनाला आवडेल तो गुणसंपन्न
पति तूं वर ॥ १८ ॥

व तो तुझ्या मनाला आनंद देणारा व कुलीन आणि शीलानें उत्तम असावा, असें सांगून राजानें वृद्ध अमात्य बरोबर देऊन ॥ १९ ॥ वस्त्र अलंकारांसहित आणि धनरत्नांसहवर्तमान वर पाहण्याकरितां पाठविली. नंतर राजा स्वस्थ राहिला आहे ॥ २० ॥ तों भगवान् नारदऋषि तेथें आले. त्या नारदमुनींची अर्घ्यपाद्यादिकेंकरून पूजा करून ॥ २१ ॥ आसनाचे ठायीं पूजित असे नारद सुखें

मनःप्रल्हादकरणंशीलेनाभिजनेनच ॥ इत्युक्त्वातांचराजेंद्रोवृद्धामात्यैःसहैवतां ॥१९॥वस्त्रालंकारसहितांधनरत्नैःसमन्वितां॥विसृज्यचक्षणंतत्रयावत्तिष्ठतिभूमिपः ॥२०॥ तावतत्रसमागच्छन्नारदोभगवानृषिः ॥ संपूज्यचततोराजाअर्घ्यपाद्येनतंमुनिम्॥२१॥ आसनेचसुखासीनःपूजितस्तेनभूभुजा ॥ पूजयित्वामुनिंराजाप्रोवाचेदंद्विजोत्तमम् ॥२२॥ पावितोहंत्वयाविप्रदर्शनेनाद्यनारद ॥ यावदेवंवदन्राजा तावत्साकमलेक्षणा ॥ २३ ॥

करून बसले असतां त्यांप्रत हें पुढील वचन राजा बोलता झाला ॥ २२ ॥ राजा ह्मणतो, हे नारदमुने, आज मला आपण आपल्या दर्शनेंकरून पुनीत केलें, असें राजा बोलत आहे तों ती कमलनयना सावित्री ॥ २३ ॥

आश्रमापासून वृद्ध अमात्यांसहवर्तमान तेथें प्राप्त झाली. तिणें सा पित्याच्या चरणांप्रत वंदन करून नारदमुनीप्रत वंदन केलें ॥ २४॥ सा कालीं सा संतुष्ट अशा राजकन्येप्रत अवलोकन करून नारदानीं राजाप्रत प्रश्न केला कीं, हे महाबाहो राजा, ही उपवर झालेली देवगर्भासारिखी सुंदरी कन्या अद्यापि वराला कां देत नाहींस ? असें नारदानीं विचारिलें असतां राजा ह्मणतो- ॥२५॥ २६ ॥

आश्रमादागतादेवीवृद्धामात्यैःसमन्विता॥अभिवाद्यपितुःपादौववंदेसामुनिंततः ॥२४॥ नारदेनतुतुष्टांतांदृष्ट्वाप्रोवाचभूमिपं ॥ कन्यांचदेवगर्भाभांकिमर्थंनप्रयच्छसि ॥२५॥ वरायत्वंमहाबाहोवरयोग्यांहिसुंदरीं ॥ एवमुक्तस्तदातेनमुनिनानृपसत्तमः ॥ २६ ॥ उवाचतंमुनिंवाक्यमनेनार्थेनप्रेषिता ॥ आगतेयंविशालाक्षीमयासंप्रेषितासती ॥ २७ ॥ अनयाचवृतोभर्तापृच्छत्वंमुनिसत्तम ॥ सापृष्टातेनमुनिनातस्मैचाचष्टभामिनी ॥ २८ ॥

याच कार्याकरितां मी इला पाठविली होती, ती ही आतांच वर पाहून आली आहे ॥ २७ ॥ तरी हे मुनिसत्तमा, इणें कोण पति वरिला तो तुह्मी पुसावा असें राजानें सांगितलें असतां नारदांनीं तिला प्रश्न केला, साकालीं ती सावित्री नारदाप्रत बोलती झाली ॥ २८ ॥

हे नारदा, द्युमत्सेन राजाचें राज्य त्याचा वैरी जो रुक्मी त्याणें हरण केलें व तो दैववशात् अंध होत्साता पत्नीसहित वनांत रहात आहे साचा पुत्र सत्यवान् ॥ २९ ॥ ह्मणून आश्रमामध्यें आहे तो म्यां अंतःकरणानें भर्ता वरिला आहे ॥ ३०॥ असें तिचें भाषण ऐकून नारद ह्मणतात, हे महाराजा, तुझ्या, कन्येनें फार वाईट केलें तें असें कीं, सत्यवान् हा गुणानीं प्रसिद्ध पाहून त्याचा दोष न कळ-

सावित्र्युवाच ॥ द्युमत्सेनस्यराज्यंवैवैरिणारुक्मिणाहृतं॥ दैवादंधःस्त्रीसहितःसत्य
वान्तत्सुतोवने ॥२९॥ आश्रमेसत्यवान्नामद्युमत्सेनसुतोमुने॥ भर्तेतिमनसाविप्र
वृतोसौराजनंदनः ॥३०॥ नारदउवाच॥कष्टंकृतंमहाराजदुहित्रातवसुव्रत॥अजानं
त्यावृतोभर्तागुणवानितिविश्रुतः ॥ ३१ ॥सत्यंवदत्यस्यपितासत्यंमाताप्रभाषते॥
स्वयंसत्यंप्रभाषेतसत्यवानितितेनसः ॥ ३२ ॥ तथाचाश्वाःप्रियास्तस्यअश्वैःक्री-
डतिमृन्मयैः ॥ चित्रेपिविलिखत्यश्वान्चित्राश्वस्तेनचोच्यते ॥ ३३ ॥

ल्यामुळें साला भर्ता वरिला ॥ ३१ ॥ साचा पिता सत्य भाषण करितो व त्याची माताही सत्य भाषण करित्ये आणि स्वयें तोही सत्य बोलतो, तेणेंकरून साला सत्यवान् असें ह्मणतात ॥ ३२ ॥ तसेंच ह्मा सत्यवंताला अश्व प्रिय असून तो बाळपणीं मृत्तिकेच्या अश्वांनीं क्रीडा करीत असे व

अश्वांचीं चित्रेंही काढितो यास्तव त्याला चित्राश्व असेंही ह्मणतात ॥३३॥ आणि तो रूप गुण यांनीं संपन्न असून सर्व शास्त्रांमध्यें निपुण आहे त्या सारखा या लोकीं कोणी मनुष्य नाहीं ॥ ३४॥ जसा सर्व रत्नांनीं पूर्ण समुद्र आहे तद्वत् तो सर्व गुणांनीं परिपूर्ण आहे, परंतु त्या सर्व गुणांचें आवरण करणारा एक महान् दोष आहे तो असा कीं, एक वर्षानें क्षीणायु होत्साता देहत्याग करील॥३५॥

रूपवान्गुणवांश्चैवसर्वशास्त्रविशारदः ॥ नतस्यसदृशोलोकेविद्यतेचेहमानवः ॥ ॥ ३४ ॥ सर्वैर्गुणैश्चसंपन्नोरत्नैरिवमहार्णवः ॥ एकोदोषोमहानस्यगुणानावृत्य तिष्ठति ॥ संवत्सरेणक्षीणायुर्देहत्यागंकरिष्यति ॥ ३५ ॥ अश्वपतिरुवाच ॥ अन्यंवरयभद्रंतेवरंसावित्रिगम्यतां ॥ विवाहस्यतुकालोयंवर्ततेशुभलोचने ॥३६॥ सावित्र्युवाच ॥ नान्यमिच्छाम्यहंतातमनसापिवरंप्रभो ॥ योमयाचवृतोभर्तासमे नान्योभविष्यति ॥ ३७ ॥

असें नारदाचें वचन ऐकून अश्वपतिराजा कन्येप्रत ह्मणतो, हे शुभलोचने, सावित्री, अद्यापि तुझा विवाहाचा काल आहे तरी तूं दुसरा पति वर. ॥ ३६ ॥ तेव्हां सावित्री ह्मणतये, हे ताता, मी आतां दुसरा भर्ता मनानेंही वरूं इच्छीत नाहीं. जो म्यां एक वेळ मनानें भर्ता वरिला तोच माझा भर्ता

होईल, दुसरा होणार नाहीं ॥ ३७ ॥ कारण कोणताही कार्याचा आधीं मनांत विचार करावा; नंतर तें वाचेनें बोलावें, मग तें शुभ असो किंवा अशुभ असो बोलल्याप्रमाणें करावें ॥ ३८ ॥ तस्मात् अन्य पुरुषाप्रत मनानेंही म्यां कसें वरावें ? आणि असें आहे कीं, राजे व पंडितजन एकवार भाषण करीत असतात. ॥ ३९ ॥ तशीच कन्या एकवार दिली जात्ये, अशा या तीन गोष्टी एकेकवार होत

विचिंत्यमनसापूर्वंवाचापश्चात्समुच्चरेत् ॥ क्रियतेचततःपश्चाच्छुभंवायदिवाशुभं ॥ ३८ ॥ तस्मात्पुमांसंमनसाकथंचान्यंवृणोम्यहं ॥ सकृज्जल्पंतिराजानःसकृज्जल्पंतिपंडिताः ॥ ३९ ॥ सकृत्कन्याप्रदीयेतत्रीण्येतानिसकृत्सकृत् ॥ पतिंमत्वानमेबुद्धिर्विचलेच्चकथंचन ॥ ४० ॥ सगुणोनिर्गुणोवापिमूर्खःपंडितएवच ॥ दीर्घायुरथचाल्पायुःसवैभर्ताममप्रभो ॥ ४१ ॥ नान्यंवृणोमिभर्तारंयदिवास्याच्छचीपतिः ॥ इतिमत्वात्वयाताातयत्कर्तव्यंसुखेनच ॥ ४२ ॥

असतात; तस्मात् अन्य पुरुषाप्रत पति मानून सत्यवंतापासून माझी मति चलित होणार नाहीं ॥४०॥ आतां तो गुणवान् असो किंवा गुणहीन असो, मूर्ख असो किंवा पंडित असो, दीर्घायुषी असो अथवा
३ अल्पायुषी असो, हे प्रभो तोच माझा भर्ता होय ॥४१॥ हे ताता, आतां जरी शचीपति इंद्र प्राप्त झाला, तरी मी अन्य भर्ता वरणार नाहीं असा माझा निश्चय जाणून जें कर्तव्य असेल तें सुखानें करावें॥४२॥

असें तिचें भाषण ऐकून त्या काळीं नारद ह्मणतात, हे राजेंद्रा, या सावित्रीची मति सत्यवंताचे ठिकाणीं अन्यंत स्थिर आहे यास्तव सत्यवंतासहवर्तमान इचा विवाह करण्याविषयीं तूं त्वरा कर ॥४३॥ शिव ह्मणतात, हे सनत्कुमारा, असा दृढनिश्चय नारदांनां सावित्रीचा जाणला, नंतर तो महाराज अश्वपति सावित्रीसहवर्तमान वनाप्रत प्रस्थान करिता झाला ॥ ४४ ॥ तो असा कीं, आपल्याबरोबर

नारदउवाच ॥ स्थिराबुद्धिश्चराजेंद्रसावित्र्याःसत्यवान्पतिः ॥ त्वरयस्वविवाहाय भर्त्रासहकुरुत्विमां ॥ ४३ ॥ ईश्वरउवाच॥ निश्चितांतुमुनिर्ज्ञात्वास्थिराबुद्धिश्चानिश्चला॥सावित्र्याचमहाराजःप्रतस्थेसौवनंप्रति ॥४४ ॥ गृहीत्वातुधनंराजाद्युमत्सेनस्यसन्निधौ ॥ स्वल्पानुगोमहाराजोवृद्धामात्यैःसमन्वितः ॥ ४५॥ नारदस्तुततःखेवैतत्रैवांतरधीयत ॥ सगत्वाराजशार्दूलेद्युमत्सेनेनसंगतः ॥ ४६॥ वृद्धश्चांधश्चराजासौवृक्षमूलमुपाश्रितः ॥ सावित्र्यश्वपतीराजापादौजग्राहवीर्यवान् ॥ ४७ ॥

द्रव्य घेऊन व थोडें सैन्य आणि वृद्ध अमात्य यांसहवर्तमान द्युमत्सेनाच्या सन्निध प्राप्त होता झाला ॥ ४५ ॥ इकडे नारदमुनी आकाशमार्गी अंतर्धान पावले व तो अश्वपतिराजा जाऊन द्युमत्सेनाला भेटला ॥ ४६ ॥ तो द्युमत्सेनराजा वृद्ध असून अंध आहे आणि एका वृक्षाच्या मूळाचा आश्रय करून बसला आहे त्याप्रत सावित्री आणि अश्वपतिराजा वंदन करितीं झालीं ॥ ४७ ॥

आणि आपलें नाम कथन करून अश्वपतिराजा उभा राहिला असतां द्युमत्सेन राजा ह्मणतो कीं, हे राजन्, आपलें आगमन कोणत्या कारणास्तव झालें ॥ ४८ ॥ असें भाषण करून अरण्यसंबंधी फळें, मूळें व अर्घ्य इत्यादिकांनीं त्याचें पूजन करून, शिव ह्मणतात, हे मुनिसत्तमा सनत्कुमारा, अश्वपतिराजाप्रत कुशलवर्तमान विचारिलें ॥४९॥ त्या कालीं अश्वपति ह्मणतो, हे राजन्, आज तुमच्या

स्वनामचसमुच्चार्यतस्थौतस्यसमीपतः ॥ उवाचराजातंभूपंकिमागमनकारणं ॥ ४८ ॥ पूजयित्वार्घ्यदानेनवन्यमूलफलैश्वसः ॥ ततःपप्रच्छकुशलंसराजामुनिसत्तम ॥ ४९ ॥ अश्वपतिरुवाच ॥ कुशलंदर्शनेनाद्यतवराजन्ममाद्यवै ॥ दुहितामममसावित्रीतवपुत्रमभीप्सति ॥ ५० ॥ भर्तारंराजशार्दूलप्राप्नोत्वियमनिंदिता ॥ ममेदंकांक्षितंपूर्वंभर्तारमनयाविभो ॥ आवयोश्चैवसंबंधोभवत्वद्यममेप्सितः ॥ ५१ ॥

दर्शनेंकरून माझें कुशळ आहे. माझ्या आगमनाचें कारण माझी सावित्री नामक कन्या तुमच्या पुत्राची इच्छा करीत आहे ॥ ५० ॥ तस्मात् हे राजश्रेष्ठा, तुमचा पुत्र या सुंदरीला भर्ता प्राप्त होवो. आणि मलाही हें इष्ट आहे यास्तव मला प्रिय असा तुमचा आमचा संबंध घडो ॥ ५१ ॥

द्युमत्सेन ह्मणतो, हे राजेंद्रा, मी तर वृद्ध आणि अंध असून राज्यभ्रष्ट झालेला फळें मुळें भक्षण करून असतों. तसाच माझा पुत्रही वनसंबंधी फलादिकांनीं जीवन करितो ॥ ५२ ॥ तस्मात् तुझी कन्या जिला दुःख कसें तें ठाऊक नाहीं ती अरण्यांत दुःख कसें सहन करील यास्तव हा संबंध मी इच्छीत नाहीं ॥ ५३ ॥ अश्वपति ह्मणतो, हे राजसत्तमा, हें सर्व जाणूनच इणें तुमच्या पुत्राला

द्युमत्सेनउवाच ॥वृद्धश्चांधश्चराजेंद्रफलमूलाशनोनृप ॥ राज्याच्युतश्चमेपुत्रोवन्ये नान्नेनजीवति ॥५२॥ साकथंसहतेदुःखंदुहितातवकानने ॥ अनभिज्ञाचदुःखाना मित्यहंनाभिकांक्षये ॥५३॥ अश्वपतिरुवाच ॥ अनयाचवृतोभर्ताजानंत्याराजस त्तम ॥ अनेनसहवासस्तुतवपुत्रेणमानद ॥ ५४ ॥ स्वर्गतुल्योमहाराजभविष्यति नसंशयः ॥ एवमुक्तस्तदातेनराजाराजर्षिसत्तमः ॥५५॥ तथेतिसप्रतिज्ञायचकारो द्वाहमुत्तमम् ॥ कृत्वाविवाहंराजेंद्रंसंपूज्यविविधैर्धनैः ॥ ५६ ॥

वरिलें आहे, तस्मात् तुमच्या पुत्रासहवर्तमान वनवासही स्वर्गतुल्य होईल यांत संशय नाहीं. असें अश्वपतिराजानें द्युमत्सेन राजर्षीला सांगितलें असतां ॥ ५४ ॥ ५५ ॥ त्याणें अंगिकारिलें. नंतर सावित्रीसत्यवंताचा विवाह उत्तमप्रकारेंकरून केला. नंतर अश्वपतीनें द्युमत्सेनाचा अनेक प्रकारच्या

द्व्यांनीं सत्कार करून ॥ ५६ ॥ व त्याला अभिवंदन करून आपल्या नगराप्रत गमन करिता झाला. इकडे सावित्रीला सत्यवंत भर्ता प्राप्त झाला असतां इंद्राणीला इंद्र प्राप्त होऊन जसा आनंद झाला तद्वत् तिला आनंद होता झाला ॥ ५७ ॥ व सत्यवंतही त्या सावित्रीसहवर्तमान आनंदित होत्साता इंद्राणीसहवर्तमान इंद्र तसा हा वनप्रदेशाचे ठायीं क्रीडा करीत आहे ॥ ५८ ॥ परंतु सा-

अभिवाद्यद्युमत्सेनंजगामनगरंप्रति ॥ सावित्रीतुवरंलब्ध्वाइंद्रंप्राप्यशचीयथा ॥ ५७ ॥सत्यवानपिराजर्षिस्तयापत्न्याभिनंदितः ॥ क्रीडतेतद्वनोद्देशेपौलाम्यामघवानिव ॥ ५८ ॥ नारदस्यतुतद्वाक्यंहृदयेतुमनस्विनी ॥ वहंतीनियमंचक्रेव्रतस्यास्यचभामिनी ॥ ५९ ॥ गणयंतीदिनान्येवनलेभेहर्षमुत्तमम् ॥ ज्ञात्वातद्दिवसंविप्रभर्तुर्मरणकारणं ॥ ६० ॥ व्रतंत्रिरात्रमुद्दिश्यदिवारात्रौस्थिराभवत् ॥ ततस्त्रिरात्रंनिर्वर्त्यसंतर्प्यपितृदेवताः ॥ ६१ ॥

वित्री हृदयामध्यें नारदाचें वाक्य आठवीत होत्साती या व्रताचा नियम करिती झाली ॥ ५९ ॥ आणि वर्षाच्या दिवसांची गणना करीत होत्साती उत्तम हर्ष न पावती झाली. कारण नारदांनीं सांगितलेला दिवस तो भर्त्याचा मरणकाळ आहे असें जाणून खिन्न असती झाली ॥ ६० ॥ नंतर त्रिरात्र व्रताचा संकल्प करून रात्रंदिवस स्वस्थअंतःकरणानें राहून तीन दिवस घालविले. नं-

तर पितर, देवता यांचें संतर्पण करून ॥ ६१ ॥ तिणें आपला नियम पूर्ण केला आणि विचार क-
रीत आहे कीं आज सत्यवंताचा मृत्यूचा दिवस आहे ॥ ६२ ॥ तो त्यादिवशीं सत्यवान् कुऱ्हाड व
पीठक ( फळें ठेवण्याचा चिव्यांचा करंडा ) हस्तांमध्यें ग्रहण करून वनाप्रत जाण्याकरितां निघाला,
त्याप्रत सावित्री बोलती झाली ॥ ६३ ॥ कीं, आज आपण माझ्या वाक्येंकरून अरण्याप्रत जाऊं

अस्यांतेनियमंकृत्वात्रिदिनस्यमनस्विनी ॥ अस्मिन्दिनेचमर्तव्यमितिसत्यव
तामुने ॥ ६२ ॥ कुठारंसंपरिगृह्यपीठकंचैवदारुकं ॥ प्रस्थितंचवनायैवसावित्रीवा
क्यमब्रवीत् ॥ ६३ ॥ नगंतव्यंवनंत्वद्यममवाक्येनमानद ॥ अथवागम्यतेसाधो
मयासहवनंव्रज ॥६४॥ संवत्सरंभवेत्पूर्णमाश्रमेस्मिन्ममप्रभो ॥ तद्वनंद्रष्टुमिच्छा
मिप्रसादंकुरुमेप्रभो ॥ ६५ ॥ सत्यवानुवाच ॥ नाहंस्वतंत्रःसुश्रोणिपृच्छस्वपि
तरौमम ॥ ताभ्यांप्रस्थापितागच्छमयासहसुचिस्मिते ॥ ६६ ॥

नये. अथवा जर जाणारच तर मला बरोबर घेऊन जावें ॥ ६४ ॥ कारण हे प्रभो, मला या आश्र
मांत येऊन एक संवत्सर पूर्ण होईल. परंतु अद्यापि मी अरण्य पाहिलें नाहीं यास्तव अरण्य पहावें
अशी माझी इच्छा आहे, तरी मजवर प्रसाद करावा ॥ ६५ ॥ असें सावित्रीचें भाषण श्रवण करून
सत्यवान् म्हणतो, हे शोभनकटि, मी तुला बरोबर नेण्यास स्वतंत्र नाहीं, यास्तव हे शुद्धहास्ये,

माझ्या मातापितरांस विचार आणि त्यांनीं पाठविली तर मजबरोबर ये ॥ ६६ ॥ असें सत्यवंतानें सांगितलें असतां ती कमलनयना सावित्री सासूसासऱ्यांचे चरणांप्रत अभिवंदन करून असें बोलती झाली ॥ ६७ ॥ कीं, आज मी वनशोभा पाहण्याकरितां जात्यें; मला आज्ञा द्यावी, असें बोलून पुनः ती साध्वी म्हणत्ये कीं, हाच एक मला आपण वर द्यावा ॥ ६८ ॥ कारण माझें मन भर्त्यासहवर्तमान

एवमुक्तातदातेनभर्त्रासाकमलेक्षणा ॥ श्वश्रूःश्वशुरयोःपादौअभिवाद्येदमब्रवीत् ॥ ६७ ॥ वनंद्रष्टुंगमिष्यामिआज्ञामह्यंप्रदीयतां ॥ उवाचवचनंसाध्वीवरमेकंप्रयच्छमे ॥ ६८ ॥ भर्त्रासहवनंगंतुमेतत्त्वरयतेमनः ॥ तस्यास्तद्वचनंश्रुत्वाद्युमत्से नोऽब्रवीदिदं ॥ ६९ ॥ व्रतंकृतंत्वयाभद्रेपारणंकुरुसुव्रते ॥ पारणांतेततोभीरुवनं गंतुंत्वमर्हसि ॥ ७० ॥ सावित्र्युवाच ॥ नियमश्चकृतोस्माभीरात्रौचंद्रोदयेसति ॥ जातेमयाप्रकर्तव्यंभोजनंतातमेशृणु ॥ ७१ ॥

वनाप्रत जाण्याविषयीं फार उत्सुक झालें आहे. असें सावित्रीचें वचन ऐकून द्युमत्सेन राजा ह्मणतो ६९ हे भद्रे, त्वां व्रत केलें आहेस तस्मात् हे सुव्रते, त्या व्रताची पारणा कर आणि नंतर तूं अरण्याप्रत जा ॥ ७० ॥ असें द्युमत्सेनाचें वचन ऐकून सावित्री ह्मणत्ये हे ताता, म्यां असा नियम केला आहे कीं रात्रौ चंद्रोदय झाला असतां भोजन करावें तस्मात् माझें वाक्य श्रवण करा ॥ ७१ ॥

आज भर्त्यासहवर्तमान वनशोभा पाहाण्याची माझी इच्छा आहे. हे नराधिपा, भर्त्याच्या समागमेंकरून मला ग्लानि निश्चयेंकरून होणार नाहीं ॥७२॥ असें सावित्रीचें भाषण ऐकून द्युमत्सेन राजा म्हणतो हे मुली, तुझी इच्छा असेल तसें कर ॥ ७३ ॥ त्या कालीं सावित्रीनें सासूसासऱ्याला नमस्कार करून, शिव ह्मणतात, हे मुनिश्रेष्ठा, सनत्कुमारा, त्या सत्यवंतासहवर्तमाननिनें वनाप्रत गमन केलें ॥७४॥

वनदर्शनकामोस्तिभर्त्रासहममाद्यवै ॥नमेतत्रभवेद्ग्लानिर्भर्त्रासहनराधिप॥७२॥
इत्युक्तस्तुतयाराजाद्युमत्सेनोमहीपतिः ॥ यत्तेभिलषितंपुत्रितत्कुरुष्वसुमध्यमे
॥ ७३ ॥ नमस्कृत्वातुसावित्रीश्वश्रूश्वशुरयोरपि ॥ सहितामुनिशार्दूलतेनसत्य
वताविभो ॥ ७४ ॥ विलोकयंतीभर्तारंप्राप्तकालंमनस्विनी ॥ वनंचफलितंदृष्ट्वा
पुष्पितद्रुमसंकुलं ॥ ७५ ॥ द्रुमाणांचैवनामानिमृगाणांचैवभामिनी ॥ पश्यंती
मृगयूथानिहृदयेनप्रवेपती ॥ ७६ ॥

त्या कालीं मार्गानें जात असतां समीप आला आहे काळ ज्याचा अशा भर्त्याप्रत वारंवार अवलोकन करीत आहे आणि पुष्पित अशा वृक्षांनीं व्याप्त व फलित अशा वनाप्रत पाहून ॥ ७५ ॥ वृक्षांचीं व मृगांचीं नांवें विचारीत होत्साती मृगांचे कळप पहात आहे; परंतु हृदयें करून थरथर कांपत्ये आहे।७६।

नंतर सत्यवंतानें अरण्यांत जाऊन फळें ग्रहण करून आणि काष्ठेंही जमावून भारा बांधिला ॥ ७७ ॥ तो भारा क्षणांत बांधून पुनः वटवृक्षाच्या शाखेवर सत्यवान् चढला व ती साध्वी वटवृक्षाखालीं बसली आहे ॥ ७८ ॥ इतक्यांत तो सत्यवान् काष्ठें पाडीत असतां अकस्मात् त्याच्या मस्तकांत वेदना उत्पन्न झाली आणि शरीरामध्यें ग्लानि उत्पन्न होऊन गात्रें थरथर कांपूं लागलीं

तत्रगत्वासत्यवान्वैफलान्यादायसत्वरं ॥ काष्ठानिचसमादायबबंधभारकंतदा
॥ ७७ ॥ काष्ठभारंक्षणात्कृत्वावटशाखावलंबनं ॥ वटवृक्षस्यसासाध्वीउपविष्टाम
हासती ॥ ७८ ॥ काष्ठंपातयतस्तस्यजाताशिरसिवेदना ॥ ग्लानिश्चमहतीजा
तागात्राणांवेपथुस्तदा ॥ ७९ ॥ आगत्यवृक्षसामीप्यंसावित्रीमिदमब्रवीत् ॥
ममगात्रेऽतिकंपश्चजाताशिरसिवेदना ॥८०॥ कंटकैर्भिद्यतेभद्रेशिरोमेशूलसंमितैः॥
उत्संगेतवसुश्रोणिस्वप्तुमिच्छामिसुव्रते ॥ ८१ ॥

॥ ७९ ॥ त्या कालीं वृक्षाखालीं येऊन सावित्रीप्रत बोलता झाला कीं, हे सुंदरी, माझ्या शरीरामध्यें मोठा कंप व मस्तकाचे ठायीं वेदना प्राप्त झाली आहे ॥ ८० ॥ हे भद्रे, ती वेदना शूळासारिख्या कंटकांनीं जसें टोंचावें तशी होते आहे यास्तव तुझ्या मांडीवर मस्तक ठेऊन निद्रा करण्याची इच्छा

करीत आहें ॥ ८१ ॥ असें भाषण ऐकून तें सर्व जाणणारी अशी ती विशाळनेत्रा सावित्री तिणें त्याचा मृत्युकाळ तेथेंच प्राप्त झाला असं मानलें ॥ ८२ ॥ त्याकालीं सत्यवान् तिच्या मांडीवर मस्तक ठेवून निजला इतक्यांत तेथें कोणी एक कृष्णपिंगटवर्ण असा उग्र पुरुष प्राप्त झाला ॥ ८३ ॥ स्वरूपानें जाज्वल्यमान अशा त्या पुरुषाप्रत अवलोकन करून वाक्यज्ञा अशी ती सावित्री त्या पुरु-

अभिज्ञातद्विशालाक्षीतस्यमृत्योर्मनस्विनी ॥ प्राप्तकालंमन्यमानातस्यतत्रैवभामिनी ॥ ८२ ॥ सत्यवानपिसुप्तस्तुकृत्वोत्संगेशिरस्तदा ॥ तावत्तत्रसमागच्छत्पुरुषःकृष्णपिंगलः ॥ ८३ ॥ जाज्वल्यमानंवपुषाददर्शाथमनस्विनी ॥ उवाचवाक्यंवाक्यज्ञाकस्त्वंलोकभयंकरः ॥८४॥ नाहंधर्षयितुंशक्यापुरुषेणापिकेनचित् ॥ इत्युक्तःप्रत्युवाचेदंयमोलोकभयंकरः ॥ ८५ ॥ यमउवाच ॥ क्षीणायुस्तुवरारोहे भर्तातवमनस्विनी ॥ नेष्याम्येनमहंबध्वाह्येतन्मेचचिकीर्षितं ॥ ८६ ॥

षाप्रत बोलती झाली कीं, सर्व लोकांस भयंकर असा तूं कोण आहेस ? ॥ ८४ ॥ मी तर कोणत्याही पुरुषानें धर्षण [ पराभव ] करण्यास शक्य होणार नाहीं. असें तिचें भाषण ऐकून सर्वलोकभयंकर असा यम बोलता झाला ॥ ८५ ॥ यम म्हणतो, हे सुंदरी, तुझ्या भर्त्याचें आयुष्य सरलें यास्तव मी

याला बांधून नेतों हेंच माझें कर्तव्य आहे ॥ ८६ ॥ असें यमानें आपलें कर्तव्य सांगून स्वतः येण्याचें कारण विस्तारेंकरून सांगण्यास प्रारंभ केला ॥ ८७ ॥ यम ह्मणतो, हा सत्यवान् धर्मसंयुक्त असून रूपवान् व गुणांचा केवळ समुद्र आहे; हा माझ्या दूतांनीं नेण्यास योग्य नव्हे ह्मणून मी स्वतः नेण्यास आलों ॥ ८८ ॥ नंतर सत्यवंताच्या शरीरापासून अंगुष्ठमात्र लिंगदेहोपाधि जीवाला

इत्युक्त्वापितृराजेनतांतदास्यचिकीर्षितं ॥ यथावत्सर्वमाख्यातुंस्वंक्रियार्थंप्रचक्रमे ॥ ८७ ॥ अयंहिधर्मसंयुक्तोरूपवान्गुणसागरः ॥ नार्होमत्पुरुषैर्नेतुमतोस्मिस्वयमागतः ॥ ८८ ॥ ततःसत्यवतःकायात्पाशबद्धंवसत्वरं ॥ अंगुष्ठमात्रंपुरुषंनिश्चकर्षयमोबलात् ॥ ८९ ॥ ततःसमुद्धृतप्राणंगतश्वासंहतप्रभं ॥ निर्विचेष्टंशरीरंतद्बभूवाप्रियदर्शनं ॥ ९० ॥ यमस्तुतंतथाबध्वाप्रययौदक्षिणामुखः ॥ सावित्रीचापिदुःखार्तायममेवान्वगच्छत ॥ नियमव्रतसंपन्नामहाभागायतव्रता ॥ ९१ ॥

पाशांनीं बांधून यमानें बलात्कारेंकरून ओढिला ॥ ८९ ॥ नंतर गेले आहेत प्राण ज्यापासून व श्वासरहित आणि निस्तेज व इंद्रियचलनादि चेष्टारहित असें तें सत्यवंताचें शरीर फार वाईट दिसूं लागलें ॥ ९० ॥ यमधर्म सत्यवंताला पूर्वोक्तप्रकारें बद्ध करून दक्षिणेकडे चालिला. त्याकाळीं नियमव्रतसंपन्ना अशी महाभाग्यवती ती सावित्री यमाचे मागून जाऊं लागली ॥ ९१ ॥

तेव्हां यमधर्म ह्मणतात, हे सावित्री, तूं आतां परत जा आणि याचें दशाहांत कर्म कर. तूं स्वाधीन होती तितकी पतीची सेवा केलीस येणेंकरून तूं पतीच्या ऋणांतून मुक्त झालीस ॥ ९२ ॥ असें यमाचें भाषण ऐकून सावित्री ह्मणते, माझा भर्ता जिकडे जाईल किंवा माझ्या भर्त्याला कोणी जिकडे नेईल तिकडे मीहि जावें हा सनातनधर्म होय ॥ ९३ ॥ आणि स्वधर्माचरणेंकरून व वडिलां-

यमउवाच ॥ निवर्त्यगच्छसावित्रीकुरुष्वास्यौर्ध्वदेहिकं ॥ कृतंभर्तुस्त्वयानृण्यं यावद्गम्यगतंतव ॥ ९२ ॥ सावित्र्युवाच ॥ यत्रमेनीयतेभर्तास्वयंवायत्रगच्छति॥ मयापितत्रगंतव्यमेषधर्मःसनातनः ॥ ९३ ॥ तपसागुरुवृत्याचभर्तृस्नेहाद्व्रतेनच॥ तवचैवप्रसादेननमेऽप्रतिहतागतिः ॥९४ ॥ प्राहुःसप्तपदंमैत्रंबुधास्तत्वार्थदर्शिनः॥ मित्रतांतुपुरस्कृत्यकिंचिद्वक्ष्यामितच्छृणु ॥ ९५ ॥ नानात्मवंतोहिवनेचरंतिधर्मं चसत्यंचपरिश्रमंच ॥ विज्ञानतोधर्ममुदाहरंतितस्मात्संतोधर्ममाहुःप्रधानं ॥ ९६॥

चे सेवेकरून भर्तृस्नेहास्तव आणि व्रतप्राभावेंकरून व तुमच्या प्रसादेंकरून माझ्या गतीला प्रतिबंध होणार नाहीं ॥ ९४ ॥ ज्ञाते सत्पुरुष असें ह्मणतात कीं, सज्जनांबरोबर सात पावलें चाललें असतां मैत्री घडते, यास्तव मित्रत्व पुढें करून मी कांहीं बोलतें तें श्रवण करा ॥ ९५ ॥ चित्ताला जिंकणारे असे अनेक मुनी बनांत वास करून धर्म व सत्य आणि परिश्रम करून स्वानुभवज्ञानानें सर्वांस धर्मो-

पदेश करितात, यास्तव धर्म हाच श्रेष्ठ आहे असें संत ह्मणतात ॥ ९६ ॥ असें तिचें भाषण ऐकून यम ह्मणतो, हे सुंदरी, तूं आतां माघारी फीर; तुझ्या या स्वर अक्षर व्यंजन व हेतु यांनीं युक्त अशा वाणीकरून मी संतुष्ट झालों आहे तर तूं याचे जीवितावांचून कोणता पाहिजे तो वर मागून घे; मी देतों ॥ ९७ ॥ असें यमाचें वाक्य ऐकून सावित्री म्हणसे माझा सासरा राज्यभ्रष्ट असून आश्रमामध्यें

यमउवाच ॥ निवर्ततुष्टोस्मितवानयागिरास्वराक्षरव्यंजनहेतुयुक्तया ॥ वरंवृणीष्वेहविनास्यजीवितंददामितेसर्वमनिंदितेवरं ॥ ९७ ॥ सावित्र्युवाच ॥ च्युतःस्वराज्याद्वनवासमाश्रितोह्यलब्धचक्षुःश्वशुरोममाश्रमे ॥ सलब्धचक्षुर्बलवान्भवेन्नृपस्तवप्रसादाज्ज्वलनार्कसन्निभः ॥ ९८ ॥ यमउवाच ॥ ददामितेसर्वमनिंदितेवरं यथात्वयोक्तंभविताचतत्तथा ॥ तवाध्वनोग्लानिमिवोपलब्धयेनिवर्तगच्छस्वनते श्रमोभवेत ॥ ९९ ॥

वनवास करीत आहे आणि अंध आहे, साला तुमच्या प्रसादेंकरून नेत्र प्राप्त व्हावे आणि तो अग्नि-
४ सूर्यासारिखा तेजस्वी व्हावा ॥ ९८ ॥ यम ह्मणतो, हे अनिंदिते, हा सर्व वर मी तुला दिला. जसें तूं ह्मणसेस तसें होईल. आतां तुला मार्ग चालून ग्लानि झाली असें दिसतें यास्तव तूं परत जा. तुला हे

श्रम न होवोत ॥९९॥ असें यमाचें वचन ऐकून सावित्री ह्मणते, हे सुरश्रेष्ठा, पतीचे सन्निधान असतां मला श्रम कोठून होतील. ज्या मार्गानें माझा भर्ता जाईल तीच माझी गति. जिकडे माझ्या पतीला नेतां तिकडे माझी गति असो. आणखीही माझें बोलणें श्रवण करा ॥ १०० ॥ कीं, सत्संगति एकवार व्हावी अशी सुजन इच्छा करितात; कारण एकवार संगति झाली असतां साधु मित्रत्व करितात आणि

सावित्र्युवाच ॥ कुतःश्रमोभर्तृसमीपतोह्यमेयतोहिभर्तामम सागतिर्ध्रुवा ॥ यतःप
तिंनेष्यसितत्रमेगतिःसुरेशभूयश्चवचोनिबोधमे ॥ १०० ॥ सतांसकृत्संगतमीप्सि
तंपरैस्ततःपरंमित्रमितिप्रचक्षते ॥ नचाफलंसत्पुरुषेणसंगतंततःसतांसंनिवसेत्समा
गमे ॥ १०१ ॥ यमउवाच ॥ मनोनुकूलंबुधबुद्धिवर्धनंत्वयायदुक्तंवचनंहिताश्र
यं ॥ विनापुनःसत्यवतोस्यजीवितंवरंद्वितीयंवरयस्वभामिनी ॥ १०२ ॥

साधूंची संगति कधीं निष्फळ व्हावयाची नाहीं यास्तव साधूंच्या समागमामध्यें वास करावा ॥१०१॥ असें तिचें भाषण ऐकून यमधर्म ह्मणतात, हे भामिनी, तूं जें भाषण केलेंस तें मनोरंजक असून ज्ञात्यांच्या बुद्धीस वाढविणारें व हितकारक आहे, यास्तव या सत्यवंताच्या जीविताचांचून पुनः दुसरा वर

(२)

मागून घे॥१०२॥सावित्री ह्मणत्ये-माझ्या सासऱ्याचें राज्य पूर्वी शत्रूंनीं हरण केलें आहे, तें त्याला प्राप्त होवो आणि त्याच्या हातून स्वधर्मत्याग न घडो हा दुसरा वर मी आपणापासून वरित्यें ॥ १०३॥ त्याकाळीं यम ह्मणतो-हे राजकन्ये, तुझ्या श्वशुराला थोड्याच दिवसांत आपलें राज्य प्राप्त होईल व तो राजा धर्मत्याग करणार नाहीं. आतां तूं पूर्ण मनोरथ होत्साती माघारी जा ह्मणजे तुला श्रम

सावित्र्युवाच ॥ हृतंपुरामेश्वशुरस्यधीमतःस्वमेवराज्यंसलभेतपार्थिवः ॥ नचस्वधर्मंप्रजहीतमेगुरुर्द्वितीयमेवंवरयामितेवरं ॥१०३॥ यमउवाच ॥ स्वमेवराज्यंप्रतिपत्स्यतेचिरान्नचस्वधर्मात्परिहास्यतेनृपः ॥ कृतेनकामेनमयानृपात्मजेनिवर्तगच्छस्वनतेश्रमोभवेत् ॥१०४॥ सावित्र्युवाच ॥ प्रजास्त्वयैतानियमेनसंयुतानियम्यचैतानयसेनकाम्यया ॥ अतोयमत्वंतवदेवविश्रुतंनिबोधयेमांगिरमीरितांमया॥१०५ अद्रोहःसर्वभूतानांकर्मणामनसागिरा॥अनुग्रहश्चदानंचसतांधर्मःसनातनः॥१०६

होणार नाहींत ॥ १०४ ॥ पुनः सावित्री भाषण करित्ये कीं, हे देवा, स्वधर्मानें बद्ध झालेल्या सर्व प्रजांचें तूं नियमन करितोस, केवळ स्वइच्छेनें तूं वर्तन करीत नाहींस यास्तव तुझें यम हें नांव प्रसिद्ध आहे आणि ही माझी पुढील वाणी श्रवण कर ॥१०५॥ कर्मानें, मनानें किंवा वाणीनेंही सर्व भूतांचे

ठिकाणीं द्रोह न करितां त्यांच्यावर अनुग्रह करणं आणि यथाशक्ति दान करणें हा सत्पुरुषांचा सनातन धर्म होय ॥ १०६ ॥ असेच या लोकीं जे समर्थ सज्जन मनुष्य आहेत ते प्रायशः आपल्या शत्रूवरही दया करितात ॥ १०७ ॥ यम ह्मणतो, हे सावित्री, तृषिताला जसें उदक तसें हें वाक्य तूं बोलिलीस; तरी आतां पुनः या सत्यवंताच्या जीवितावांचून जो वर पाहिजे असेल तो मागून घे.

एवंप्रायश्चलोकेहिमनुष्याःशक्तिपेशलाः ॥ संतःस्वेष्वप्यमित्रेषुदयांप्राप्तेषुकुर्वते ॥१०७॥यमउवाच॥ पिपासितस्येवयथाभवेत्पयस्तथात्वयावाक्यमिदंसमीरितं ॥ विनापुनःसत्यवतोस्यजीवितंवरंवृणीष्वेहशुभेयदीच्छसि ॥ १०८ ॥ सावित्र्यु० ॥ ममानपत्यःपृथिवीपतिःपिताभवेत्पितुःपुत्रशतंचऔरसं ॥ कुलस्यसंतानकरंचतद्भवेत्तृतीयमेवंवरयामितेवरं ॥ १०९ ॥यमउ०॥ कुलस्यसंतानकरंसुवर्चसंशतंसुतानांपितुरस्तुतेशुभे ॥ कृतेनकामेननराधिपात्मजेअतीवदूरंहिपथस्त्वमागता ॥११०॥

॥ १०८ ॥ असें यमाचें वाक्य ऐकून सावित्री ह्मणत्ये–माझा पिता पृथिवीपति आहे; परंतु त्याला पुत्र नाहीं तर कुलवृद्धी करणारे असे औरस शंभर पुत्र त्याला व्हावे हा तिसरा वर मी वरियें. ॥ १०९ ॥ यम ह्मणतो–हे राजकन्ये, तुझ्या पित्याला कुलवृद्धी करणारे व तेजस्वी असे शंभर पुत्र होतील हा तुझा मनोरथ मी पूर्ण केला. आतां तूं फारच दूर आलीस ॥ ११० ॥ असें यमाचें भा-

षण ऐकून सावित्री ह्मणसे—भर्त्याचे सान्निधान असतां हें मला कांहींच दूर नाहीं. भर्त्याबरोबर येण्यास याहूनही माझें मन दूर धांवतें. हे यमधर्मा, आपण चालत असतां आणिक मी बोलत्यें आहें तें माझें वचन श्रवण करा ॥ १११ ॥ आपण प्रतापवान् असे विवस्वताचे ( सूर्याचे ) पुत्र आहां, ह्म-

सावित्र्युवाच ॥ नदूरमेतन्ममभर्तृसान्निधौमनोहिमेदूरतरंप्रधावति ॥ अथव्रजन्नेव गिरासमुन्नतंमयोच्यमानंश्रृणुधर्ममेवचः ॥ १११ ॥ विवस्वतस्त्वंतनयःप्रतापवान् ततोहिवैवस्वतउच्यतेबुधैः ॥ समेनधर्मेणचरंतिताःप्रजास्ततस्तवेहेश्वरधर्मराजता ॥ ११२ ॥ आत्मन्यपिनविश्वासस्तावद्भवतिसत्सुयः॥तस्मात्सत्सुविशेषेणसर्वःप्रणयमृच्छति ॥ ११३ ॥ सौहृदात्प्रणयच्चापिविश्वासोनामजायते ॥ तस्मात्सत्सुविशेषेणविश्वासंकुरुतेजनः ॥ ११४ ॥

णून आपणास वैवस्वत असें ह्मणतात व आपल्या सत्तेनें सर्व प्रजा स्वधर्मानें चालतात ह्मणून आपणास धर्मराज असें ह्मणतात ॥ ११२ ॥ हे यमधर्मा, असें आहे कीं, आपला आपले ठिकाणींही जो विश्वास नाहीं तो साधूंचे ठिकाणीं विश्वास असतो यास्तव सर्व लोक साधूंचे ठिकाणीं विशेषतः नम्रता पावतात ॥ ११३ ॥ हृदयामध्यें निष्कपटपणा व विनयसंपन्नता येणेंकरून

विश्वास उत्पन्न होतो, यास्तव साधूंचेठायीं विशेषेंकरून जन विश्वास करितात ॥ ११४ ॥ यम ह्मणतो–हे अंगने, जें तूं शुभवचन बोलिलीस असें आजपर्यंत मी कोणापासूनही ऐकिलें नाहीं, येणेंकरून मी संतुष्ट झालों आहें; तर याच्या जीवितावांचून आणिक चवथा वर मागून घे आणि माघारी जा ॥ ११५ ॥ तेव्हां सावित्री ह्मणत्ये–माझे ठिकाणीं सत्यवंता पासून

यमउवाच ॥ उदाहृतंतेवचनंयदंगनेशुभंनतादृकत्वदृतेमयाश्रुतं ॥ अनेनतुष्टोऽस्मिविनास्यजीवितंवरंचतुर्थंवरयस्वगच्छ ॥ ११५ ॥ सावित्र्युवा० ॥ ममात्मजंसत्यवतस्तथौरसंभवेदुभाभ्यामिहयत्कुलोद्भवं ॥ शतंसुतानांबलिनांमहात्मनामिमंचतुर्थंवरयामितेवरं ॥११६॥ यमउ०॥ शतंसुतानांबलवीर्यशालिनांभविष्यतिप्रीतिकरंतवाबले ॥ परिश्रमस्तेनभवेन्नृपात्मजेनिवर्तदूरंहिपथस्त्वमागता ॥ ११७॥

शंभर औरस पुत्र व्हावे ते असे कीं, बलवान् व महात्मे आणि ज्यांपासून इहलोका आमचें कुळ वृद्धिंगत होईल हा चवथा वर मी आपणापासून वरितें ॥ ११६ ॥ यम म्हणतो–हे राजकन्ये, बलेंकरून व पराक्रमेंकरून शोभणारे व प्रीति करणारे असे शंभर पुत्र तुला होतील; आतां तूं परत

जा, बहुत दूर आलीस. तुला मार्गसंबंधी परिश्रम न होवोत ॥ ११७ ॥ असें यमाचें भाषण ऐकून सावित्री ह्मणसे, साधूंची वृत्ति धर्मविषयीं निरंतर असते. साधू कधींही दुःख पावत नाहींत आणि सज्जनांचा साधूंशीं समागम निष्फल होत नाहीं. साधु संसाराचा अनुभव घेत नाहींत॥११८॥संत सत्यें करूनच सूर्याचें आराधन करितात व संत आपल्या तपेंकरून भूमीप्रत धारण करितात आणि संत हे

सावित्र्यु० ॥ सतांहियाशाश्वतधर्मवृत्तिःसंतोनसीदंतिनचव्यथंतिते ॥ सतांसद्भिर्नाफलंसंप्रयातिसद्भ्योभवंनानुभवंतिसंतः ॥ ११८ ॥ संतोहिसत्येननयजंतिसूर्यं संतोभूमिंतपसाधारयंति ॥ संतोगतिर्भूतभव्यस्यराजन्सतांमध्येनावसीदंतिसंतः ॥ ११९ ॥ आर्यजुष्टमिदंवृत्तमितिविज्ञायशाश्वतं ॥ संतःपरार्थंकुर्वाणानावेक्षंतेप्रतिक्रिया ॥१२०॥ नचप्रसादःसत्पुरुषेषुमोघोनचव्यर्थस्तपस्यतिचाभिमानः॥ यस्मादेतन्नियतंसत्सुनित्यंतस्मात्संतोरक्षितारोभवंति ॥ १२१ ॥

मागें झालेल्या व पुढें होणारांचेही तारक आहेत. साधूंमध्यें वास करणारे सज्जन कधींही दुःख पावत नाहींत ॥ ११९ ॥ असें हें श्रेष्ठ जनांनीं सेवन केलेलें शाश्वतव्रत जाणून साधु परोपकार करीत होत्साते प्रत्युपकाराची इच्छा करीत नाहींत ॥ १२० ॥ आणि सत्पुरुषांचा प्रसाद कधीं व्यर्थ होत

नाहीं व परोपकारादिरूप तपाविषयीं जो अभिमान तोही व्यर्थ होत नाहीं या गोष्टी सत्पुरुषांचे ठिकाणीं निश्चयेंकरून नित्य आहेत यास्तव साधु सर्वांचें रक्षण करणारे होतात ॥ १२१ ॥ असें सावित्रीचें भाषण ऐकून यम ह्मणतो, हे पतिव्रते, जसें जसें तूं माझ्या मनास अनुकूळ व धर्मयुक्त आणि प्रौढ आहे अर्थ ज्यामध्यें व शोभन फळ देणारें असें भाषण करित्येस तशी तशी तुझे ठिकाणीं

यमउवाच ॥ यथायथाभाषासिधर्मसंहितंमनोनुकूलंसुफलंमहार्थवत् ॥ तथातथामे त्वयिभक्तिरुत्तमावरंवृणीष्वाप्रतिमंपतिव्रते ॥ १२२ ॥ सावित्र्युवाच ॥ नतेऽपवर्गः सुकृताद्विनाकृतस्तथान्यथाऽन्येषुवरेषुमानद ॥ वरंवृणेजीवतुसत्यवानयंयथाम्रृताह्येवमहंविनापतिं ॥ १२३ ॥ नकामयेभर्तृविनागतंसुखंनकामयेभर्तृविनागतां दिवं ॥ नकामयेभर्तृविनागतांश्रियंनभर्तृहीनाव्यवसामिजीवितुं ॥ १२४ ॥

माझी उत्तम प्रीति होत आहे, तस्मात् तूं आतां अप्रतिम वर मजपासून मागून घे ॥ १२२ ॥ तेव्हां सावित्री ह्मणत्ये हे मानद, आपणापासून मी मोक्ष किंवा अन्यवर कोणताही वरीत नाहीं, तर हा सत्यवान् जीवंत होवो, हाच वर मी वरित्यें; कारण पतीवांचून मी मृततुल्य आहें ॥१२३॥ भर्त्या-वांचून प्राप्त झालेल्या सुखाला किंवा स्वर्गलोकाला किंवा संपत्तीला मी इच्छीत नाहीं; किंबहुना

भर्त्यावांचून मी वांचावयासही इच्छीत नाहीं ॥ १२४ ॥ आणि आपण मला दयाळुत्वेंकरून शंभर औरस पुत्र होतील असा वर दिला आहे तर मी हाच वर मागत्यें कीं, हा सत्यवंत जीवंत होवो आणि हा जीवंत होईल तेव्हांच तुमचें वचन सत्य होईल॥१२५॥असें सावित्रीचें भाषण श्रवण करून तूं ह्मणतेस तसेंच होवो असें ह्मणून सत्यवंताला पाशमुक्त करून हर्षयुक्त होत्साता यमधर्म सावित्री-

वरोपिवैवस्वतह्यौरसात्मजशतेषुदत्तोभवताकृपालुना ॥ वरंवृणेजीवतुसत्यवानयं तदैवसत्यंवचनंभविष्यति॥ १२५॥तथेत्युक्त्वातुतान्पाशान्मुक्त्वावैवस्वतोयमः॥ धर्मराजःप्रहृष्टात्मासावित्रीमिदमब्रवीत्॥ १२६ ॥ एषभद्रेमयामुक्तोभर्तातेकुलनंदिनि॥आरोग्यवयसीप्राप्यसिद्धार्थश्चभविष्यति ॥१२७॥ चतुर्वर्षशतंचायुस्त्वयासार्धमुपैष्यति ॥ सागतावटसामीप्यंकृत्वोत्संगेऽचिरस्ततः ॥ १२८ ॥ प्रबुद्धस्तुततोब्रह्मन्सत्यवानिदमब्रवीत् ॥ मयास्वप्नोवरारोहेदृष्टोद्यैवचभामिनि ॥ १२९ ॥

प्रत बोलता झाला ॥ १२६ ॥ तें असें कीं, हे स्वकुलानंददायिनी कल्याणशीले सावित्री, हा तुझा भर्ता म्यां सोडिला, याला आरोग्य आणि तारुण्य प्राप्त होऊन हा पूर्ण मनोरथ होईल ॥ १२७ ॥ आणि चारशें वर्षेंपर्यंत तुजसहवर्तमान हा आयुष्य पावेल असें यमधर्मानें सांगतांच सावित्री त्याडट-वृक्षाखालीं जाऊन सत्यवंताचें शिर आपल्या मांडीवर घेऊन बसली ॥ १२८ ॥ इतक्यांत सत्यवान्

जागा होऊन सावित्रीप्रत हें पुढील वचन बोलता झाला तें असें कीं, हे सुंदरि, आज म्यां कांहीं स्वप्न पाहिलें ॥ १२९ ॥ असें सांगून झालेला सर्व वृत्तांत कथन केला व यमाशीं झालेला संवादही कथन केला ॥ १३०॥ इकडे आश्रमामध्यें द्युमत्सेनराजा पुत्राची मार्गप्रतीक्षा करीत आहे, तंव सूर्य अस्तास गेला तेव्हां इकडे तिकडे धावूं लागला ॥ १३१ ॥ पुत्राचा शोध करीत या आश्रमांतून त्या

तत्सर्वंकथितंतस्यैयद्वृत्तंसर्वमेवतत् ॥ तथाचकथितःसर्वःसंवादश्चयमेनहि ॥१३०॥
अस्तंगतेततःसूर्येद्युमत्सेनोमहीपतिः॥पुत्रस्यागमनाकांक्षीइतश्चेतश्चधावति १३१
आश्रमादाश्रमंगच्छन्पुत्रदर्शनकांक्षया॥ आवयोरंधयोर्यष्टिःकगतोसिविनावयोः
॥ १३२ ॥ एवंसविविधंक्रोशन्सपत्नीकोमहीपतिः॥ चकारदुःखसंतप्तःपुत्रपुत्रेति
चासकृत् ॥ १३३ ॥ अकस्माद्देवराजेंद्रोलब्धचक्षुर्महीश्वरः ॥ तद्दृष्ट्वापरमाश्चर्यंच
क्षुःप्राप्सिंद्विजोत्तमाः ॥ सांत्वपूर्वमिदंवाक्यमुचुस्तेतापसाभृशं ॥ १३४ ॥

आश्रमांत गमन करीत होत्साता ह्मणत आहे कीं, हे पुत्रा ! आह्मां आंधळ्यांची काठी असा तूं आह्मांवांचून कोठें गेलास ? ॥ १३२ ॥ असा बहुत प्रकारांनीं आक्रोश करीत होत्साता पत्नीसहवर्तमान दुःखसंतप्त होऊन हे पुत्रा ! हे पुत्रा ! असा शोक करिता झाला ॥१३३॥ तंव अकस्मात् त्या राजाला ॥२१॥

नेत्र प्राप्त झाले. तें नेत्रप्राप्तीचें परम आश्चर्य पाहून तापस ब्राम्हण त्या राजाचें सांत्वन करून बोलते झाले ॥१३४॥ ब्राह्मण ह्मणतात–हे राजा, या नेत्रप्राप्तिच्या लक्षणावरून असें वाटतें कीं, तूं पुत्राशीं समागम लवकर पावशील ॥ १३५ ॥ शिव ह्मणतात, हे द्विजसत्तमा सनत्कुमारा, असें ते तापस ब्राह्मण बोलत आहेत इतक्यांत सावित्रीसहवर्तमान सत्यवान् प्राप्त झाला ॥ १३६ ॥ त्या सत्यवंतानें सर्व

चक्षुःप्राप्स्यामहाराजसूचितंतेमहीपते ॥ पुत्रेणचसमंयोगंप्राप्स्यसेनृपसत्तम॥१३५ ईश्वरउवाच ॥ यावदेवंवदंत्येतेतापसाद्विजसत्तमाः ॥ सावित्रीसहितःप्राप्तःसत्य वान्द्विजसत्तम ॥ १३६ ॥ नमस्कृत्यद्विजान्सर्वान्मातरंपितरंतथा ॥ सावित्रीच ततोब्रह्मन्ववंदेचरणाविति ॥ १३७ ॥ श्वश्रूश्वशुरयोर्ब्रह्मन्सावित्रीकमलेक्षणा ॥ ॥ १३८ ॥ मुनयऊचुः ॥ वरंसावित्रीजानासिकारणंवरवर्णिनि ॥ वृद्धयोश्चक्षु षःप्राप्तेःश्वश्रूश्वशुरयोःशुभे ॥ १३९ ॥

ब्राह्मणांना व मातापितरांना नमस्कार केला. नंतर कमलनेत्रा जी सावित्री तिणें सासूसासऱ्यांच्या चरणांप्रत वंदन केलें ॥ १३७ ॥ १३८ ॥ त्या कालीं ऋषि ह्मणतात, हे सुंदरि सावित्री, या वृद्ध अ तुझ्या सासू सासऱ्यांला नेत्र प्राप्त झाले याचें कारण तूं जाणत्येस काय ? ॥ १३९ ॥

असें ऋषींनीं विचारिलें असतां सावित्री ह्मणत्ये, हे मुनिश्रेष्ठहो, नेत्रप्राप्तीचें कारण मी कांह
जाणत नाहीं, माझा भर्ता बहुत काळ निद्रा करिता झाला यास्तव आह्मांस येण्यास विलंब लागल
॥ १४० ॥ असें तिचें भाषण ऐकून सत्यवान् ह्मणाला, हे विप्रहो, हें सर्व इच्या प्रभावेंक...

सावि० ॥ नजानामिमुनिश्रेष्ठाश्चक्षुषःप्राप्तिकारणं ॥ चिरंसुप्तस्तुमेभर्तातेनकाल
व्यतिक्रमः ॥१४०॥ सत्यवानुवाच ॥ अस्याःप्रभावात्संजातंदृश्यतेकारणंनच ॥
तत्सर्वंविद्यतेविप्राःसावित्र्यास्तपसःफलं ॥ व्रतस्यैवतुमाहात्म्यंदृष्टमेतन्मयाधुना
॥ १४१ ॥ ईश्वरउवाच ॥ एवंतुवदतस्तस्यतदासत्यवतःप्रभो ॥ दूताःसमागता
स्तस्यआचरन्नृपतेर्हितम् ॥ १४२ ॥ येनराज्यंबलाद्राजन्हृतंमंत्रेणमंत्रिणा ॥
अमात्येनहतःसोपिइतिपौराःसमागताः ॥ १४३ ॥

प्राप्त झालें, दुसरें कांहीं कारण दिसत नाहीं. हें सावित्रीच्या तपाचें फळ होय; कारण इच्या व्रताचें
महात्म्य म्यां प्रत्यक्ष पाहिलें ॥१४१॥ शिव ह्मणतात, असें सत्यवान् बोलत आहे तंव द्युमत्सेनराजाचे
हित इच्छिणारे दूत नगरापासून येऊन राजाप्रत सांगतात कीं, ॥१४२॥ हे राजन्, ज्या शत्रूनें आपलें

राज्य बलात्कारेंकरून हरण केलें होतें, त्याला आपल्या प्रधानानें मारिलें असें दूत सांगत आहेत; तोंच पुरवासी लोकही प्राप्त झाले ॥ १४३ ॥ ते पुरवासी लोक ह्मणतात कीं, हे राजश्रेष्ठा, चला, आपलें राज्य पालन करा आणि मंत्री पुरोहितांकरवीं आपणास अभिषेक करून द्या ॥ १४४ ॥ शिव सांगतात, नंतर तो द्युमत्सेनराजा पौरजनांसहवर्तमान आपल्या नगरांत येऊन वडिलार्जित राज्य पावता

पौराऊचुः ॥ उत्तिष्ठराजशार्दूलस्वराज्यंपालयप्रभो॥अभिषिंचस्वराजेंद्रपुरेमंत्रीपुरोहितैः ॥ १४४ ॥ ईश्वरउवाच ॥ सगत्वाराजशार्दूलःस्वपुरंजनसंवृतः ॥ पितृपैतामहंराज्यंसंप्राप्तंचमहात्मना ॥ १४५ ॥ सावित्रीसत्यवांश्चैवपरांमुदमवापतुः ॥ जनयामासपुत्राणांशतंवैबाहुशालिनां ॥ १४६ ॥ व्रतस्यैवतुमाहात्म्यात्तस्याःपितुरजायत ॥ पुत्राणांचशतंब्रह्मन्प्रसन्नाच्चयमात्तथा ॥ १४७ ॥

झाला ॥१४५॥ सावित्री आणि सत्यवान् परमानंद पावतीं झालीं. नंतर बाहुबळानें शोभणाऱ्या अशा शंभर पुत्रांला सावित्री प्रसवती झाली ॥१४६॥आणि याच व्रताच्या प्रभावेंकरून व यमाच्या प्रसादानें सावित्रीचा पिता जो अश्वपति राजा त्यालाही शंभर पुत्र होते झाले ॥ १४७ ॥

शिव ह्मणतात, हे सनत्कुमार ऋषे, हें तुला उत्तम असें व्रताचें महात्म्य म्यां कथन केलें, ज्या या व्रताच्या प्रभावें करून सावित्रीचा भर्ता क्षीणायु असून जीवंत झाला असें हें अवैधव्य फल देणारें

एतत्तेकथितंसर्वंव्रतमाहात्म्यमुत्तमं ॥ क्षीणायुर्जीवितोभर्ताव्रतस्यास्यप्रभावतः ॥ कर्तव्यंसर्वनारीणामवैधव्यफलप्रदं ॥ १४८ ॥ ॥ इतिश्रीस्कंदपुराणेशिवसनत्कुमारसंवादेवटसावित्रीकथासंपूर्णा ॥ श्रीकृष्णार्पणमस्तु ॥

व्रत सर्व स्त्रियांनीं अवश्य करावें ॥ १४८ ॥ ॥ इति सार्थ वटसावित्रीकथा समाप्ता ॥ ॥ श्री कृष्णार्पणमस्तु ॥



